॥ ॐ नमः श्रीगणेशाय ॥

# कारणत्वविवेकः

मिथिलादेशान्तर्गतदरभङ्गामण्डलान्तःस्थित-
ठाढ़ीग्रामनिवास्तव्येन, काशीस्थरानी-
चन्द्रावती श्यामामहाविद्यालया-
रम्भकतत्प्रधानाध्यापकेन
लब्धधौतपटप्रतिष्ठेन
मैथिलभूसुरपण्डितवर-
श्रीश्रीनन्दनझाशर्म्मणा निर्म्मितः,
स्वयं संशोध्य स्वद्रव्यव्ययेन
प्रकाशितश्च ।

---

सन १३४८ साल, संवत् १९९७-१९४० ईशवीय-
पौषकृष्णपञ्चम्यां गुरौ

पं॰ श्री जयमाधवशर्म्मणः पुस्तकम् ।

॥ ॐ नमः श्रीगणेशाय ॥

# कारणत्वविवेकः

मिथिलादेशान्तर्गतदरभङ्गामण्डलान्तःस्थित-
ठाढ़ीग्रामनिवास्तव्येन, काशीस्थरानी-
चन्द्रावती श्यामामहाविद्यालया-
रम्भकतत्प्रधानाध्यापकेन
लब्धधौतपटप्रतिष्ठेन
मैथिलभूसुरपण्डितवर-
श्रीश्रीनन्दनझाशर्म्मणा निर्म्मितः,
स्वयं संशोध्य स्वद्रव्यव्ययेन
प्रकाशितश्च ।

---

सन १३४८साल, संवत् १९९७-१९४० ईशवीय-
पौषकृष्णपञ्चम्यां गुरौ

## शुद्ध्य शुद्धिसूची

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ९ | सर्वेयाम् | सर्वेषाम् |
| ३ | ६ | ज्ञऽप्तिर्व्वा | ज्ञप्तिर्व्वा |
| ३ | ७ | ज्ञप्तययो | ज्ञप्त्यो |
| ७ | ८ | नियन | नियत |
| १० | १२ | लाघब | लाघव |
| १२ | १६ | पर्य्यात्प | पर्य्याप्त |
| १३ | ४ | निरूपितत्वस्येव | निरूपितत्वस्यैव |
| १६ | १६ | सयोगस्य | संयोगस्य |
| १७ | २ | समवावि | समवायि |
| २२ | ३ | पृथत्वात्मको | पृथक्त्वात्मको |
| २६ | १२ | अभावन | अभावेन |
| २८ | ६ | अभावात्वापत्तेः | अभावत्वापत्तेः |
| ३० | २ | नोन्ययम् | नेत्ययम् |



॥ श्री × पातु ॥

# भूमिका




किकानि वैदिकानि च यावन्ति सन्ति कार्य्यजातानि न जात्वपि तान्यन्तरेण तर्कं सुष्ठु भवितुं प्रभवन्तीति स्वपरोक्षमेव समेषां प्रतिभातीति तर्कस्य प्रदिपदमत्यावश्यकत्वम् । एतत्सम्पादकत्वेनैव च तर्कशास्त्रस्य शास्त्रान्तरापेक्षया प्राधान्यं मन्यन्ते मनीषिणः। तस्मिंश्च तर्कशास्त्रे कार्य्यकारणभावविचारस्व यहुश × प्रचलितत्वेन तत्रापि कारणत्वविमर्शस्याभ्यर्हितत्वेन प्रागेव न्यायप्राप्तत्वेन कारणत्वविवेकनामधेयोऽयं ग्रन्थो मया निरमायि। अस्मिन् पुरातनानां महामहनीयकीर्त्तीनां ग्रन्थविरचयितॄणां तत्र पटीयसां सिद्धान्ताननुसृत्य भूयांसो विषया; भूयांसश्च स्वयमनुभूय समाकलय्य च सन्निवेशिताः। अत्र च विद्यमाना अनेके विषया ग्रन्थान्तर उपभ्यमाना अपि नैकत्रैवंरूपेण सङ्कलिता अपि तु भूयसाऽऽयासेन गवेषणायामुपलभ्या

इतीदानीन्तनानामध्येरहणामत्यल्पश्रमेण बहूनां पदार्थाना-मवगमनाय रचितः। आशास्यते चायमविस्तरोऽपि बहूप-काराय झटिति भविष्यतीति । तथा सत्येव च स्वीयमा-यासं सफलमवगम्य कृतकृत्येन मया भूयेतेति। गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः। हसन्ति दुर्ज्जनास्तत्र समादधति सज्जनाः इत्यतिचिरन्तनं चिन्तामणिकारपद्य-मधिहृदयं निधाय काञ्चित्त्रुटिमुपलभ्यमानामप्यधिनि जस्वान्तं नो समावेशयन्तु किन्तु परिशोधयन्तु तत्रभवन्तः सन्त इति भूयो भूयोऽभ्यर्थयते।

विनीतः

पं० श्रीश्रीनन्दनझा शर्म्मा—

दरभङ्गामण्डलान्तर्गतठाढीग्रामनिवास्तव्यः



## कारणत्वविवेक विरचयिता



मैथिल पण्डित श्री श्रीनन्दन झा,

दरभङ्गामण्डलान्तर्गतगढ़ी ग्राम निवासी।

श्री गणेशाय नमः

# ❀ कारणत्वविवेकः ❀



यद्दयादृष्टिमात्रेण सुरर्षिमनुजादयः ।
लभन्ते सर्व्वदाऽभीष्टं साम्बं नौमि तमीश्वरम् ॥ १ ॥

सरस्वतीं सिद्धिकरं गणेशं प्रणम्य मातापितरौ गुरूँश्च ।
झोपाभिधः श्रीयुतनन्दनोऽहं विवेचये कारणता पदार्थम् ॥२॥

प्रायेण पदार्थव्यवस्थाया कार्य्यकारणभावाधीनत्वेन तन्मीमांसाया आवश्यकत्वेन तत्राप्यभ्यर्हितत्वात्कारणत्वमीमांसायाः प्रागेव परमावश्यकत्वेन सा तावत् प्रस्तूयते । किन्नाम कारणत्वम् पूर्व्ववर्त्तित्वमिति चेन्न चिरनष्टानामपि सर्व्वेषां व्यवहिताव्यवहितपूर्व्ववर्त्तिनां पदार्थानां कारणत्व-

प्रसङ्गात्। अव्यवहितपूर्व्ववर्त्तित्वं तदित्यपि न यागादिजन्यव्यापारस्यैव हि स्वर्गादौ तत्त्वं स्यान्न तु यागादेर्व्यापारिणोऽपि। न च व्यापारस्य यागजन्यादृष्टस्य कारणतावच्छेदकसंसर्गत्वेन तेन च संसर्गेण यागादेरप्यव्यवहितपूर्व्वत्वोपपत्तिरिति वाच्यम्। स्वजन्यजन्यत्वसम्बन्धेन कारणकारणस्यापि कारणत्व प्रसंगात्। व्यापारद्वारैव व्यवहितस्य कारणत्वं विवक्षितमिति तु वक्तुमशक्यम् विशेषोक्तिमन्तरेण व्यापारस्यापि दुर्व्विज्ञेयत्वात्। यद्विना यद्यन्न जनयति तत्तस्य तत्र व्यापार इति चेन्न सहकारिणामव्यापाराणामपि व्यापारत्वप्रसङ्गात्। तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारत्वमित्यपि प्रकृते वक्तुमशक्यम्। जन्यत्वस्य जनकतानिरूपितत्वेन जनकत्वलक्षणस्य जनकत्व घटितत्वे आत्माश्रयात्। अस्तु वैतदविचारितरमणीयम् एवमपि गगनादेरव्यवहितपूर्व्ववर्त्तित्वेन सर्व्वकार्य्येषु कारणत्वप्रसङ्गोदुर्वारः। अनन्यथासिद्धपूर्व्ववर्त्तित्वं तदिति चेत् प्रकारे थाल्प्रत्ययविधानेनान्यप्रकारेण सिद्धिमद्भिन्नपूर्व्ववर्त्तित्वमित्येवार्थः पर्य्यवस्यति तथा चेदमत्र विवेचनीयम् कस्मादन्येन प्रकारेण न सिद्धिः? काचसिद्धिरुत्पत्तिर्ज्ञप्तिर्वा?



यदि कार्य्यादन्येन प्रकारेण न यस्योत्पत्तिस्तत् कारणमित्यभिधीयते नेदं साम्प्रतम् कार्य्येण कारणानुत्पत्तेः। नापि कार्य्यादन्येन प्रकारेण यस्यन ज्ञप्तिस्तत्कारणम् प्रत्यक्षादिनाऽपि कारणावगमात्। न हि सर्व्वा कार्य्य लिङ्गजैव कारणस्य ज्ञप्तिः। नापि कारणा द्व्यतिरिक्तेन प्रकारेण यस्य न निष्पत्तिर्ज्ञप्तिर्व्वा तत्कारणमिति युक्तं वक्तुम् स्वस्मात्स्वोत्पत्तिज्ञप्त्योरभावात्। तथाऽभ्युपगमे आत्माश्रयात्। दण्डत्वादिनाऽपि कारणस्य दण्डादेर्ज्ञप्तेश्च॥ अथ व्यापारवत्त्वं कारणत्वमित्यभ्युपगम्यत इति चेन्न तद्धि व्यापारसमवायित्वम् व्यापारजनकत्वं वा। नाद्यः यागादेस्तज्जन्यव्यापारस्य च स्वर्गादावकारणत्वप्रसङ्गात्। न द्वितीयः तद्घटकजनकत्वस्यैव निरूप्यमाणत्वात्, व्यापारस्य व्यापारविरहिणामन्येषाञ्च कारणानामतथात्वप्रसङ्गाच्च। न च नित्यसत्त्वासत्त्वान्यतरप्रसक्तिनिवारकत्वं तत्त्वम् नित्यसत्त्वं नित्यासत्त्वंवा प्रसज्ज्यमानं येन निवार्य्यते तत्कारणमित्यर्थ इतिचेन्न निवारकपदावयव प्रत्ययस्य कारणत्वनिर्व्वचनमन्तरेणानिरूप्यमाणार्थकत्वात् अन्यतरत्वस्यानुगतस्य निर्व्वक्तुमशक्यत्वाच्च। न च यदनभ्युपगमे यस्य तत्पूर्वं सत्त्वप्रसङ्गस्तत्तस्य कारणम्

कारणानभ्युपगमे हि कार्य्यस्य स्वोत्पत्तिसमयात्पूर्व्वमपि सत्त्वं प्रसज्येतेत्यर्थ इति चेन्न यदि भावो विनाशी न स्यात्तदा पूर्व्वमपि सन् स्यादाकाशवदिति तद्विनाशस्यापि प्रतियोगितया तदापादकत्वात्कारणत्वं स्यात् । न च पूर्व्ववर्त्तिनो यस्यानभ्युपगमो यस्य स्वोत्पत्तिपूर्व्वसत्त्वमापादयति तत्तस्य कारणम् ध्वंसस्तुकार्य्यपूर्व्ववर्त्ती नेति न तत्र कारणत्वप्रसङ्ग इति न दोष इति वाच्यम् तथा सति कार्य्यपूर्व्वसत्त्वे सति कार्य्यपूर्व्वसत्तापादकानभ्युपगमबिषयत्वं कारणत्वमिति पर्य्यवसानेन पाकस्थले यदि रूपप्रागभावो न स्यात्तदा रसो ऽपि पूर्व्ववर्त्ती स्यादिति रसपूर्व्वसत्ता पादकरूपप्रागभावानभ्युपगमविषयरूपप्रागभावस्यापि रसकारणत्वापत्तेः । नन्वस्तु रसे रूपप्रागभावस्य कारणत्वं को दोष इति चेन्न एवं सत्युक्तरीत्या रसंप्रति रूपसामग्र्या अपि कारणत्वप्रसङ्गात् । न च पाकजस्थले रूपसामग्री रसे कारणमस्तु तथा ऽपि दोषाभावादिति वाच्यम् तथा ऽङ्गीकारे ऽभिन्नसामग्रीकत्वेन रूपरसयोरभेदापत्तेः । सामग्रीभेदस्यैव कार्य्यभेदप्रयोजकत्वात्तदभेदे सोऽपि न स्यात् । यत्पदार्थाननुगमेनाननुगमप्रसङ्गाच्च । अथ नियतप्राग्वर्त्तित्वं कारण-



त्वमिति चेन्न अवश्यम्भावस्य नियमार्थत्वेन गगनादेः सर्व्वकार्य्यहेतुत्वप्रसङ्गात् । अवयवरूपादेश्चावयविरसादिषु कारणत्वप्रसङ्गाच्च । अनन्यथासिद्धनियतपूर्व्ववर्त्तित्वं कारणत्वमिति चेन्न अन्यत्वं कार्य्यापेक्षया कारणापेक्षया वा विवक्षितमिति शङ्का निराकरणासम्भवस्य प्राग्निरूपणात् ।

अस्तुवेदंलक्षणम् तथा ऽप्येषो ऽत्र मीमांसा ऽवसरः अनन्यथासिद्धत्वमात्रं कारणत्वमस्तु नियतपूर्व्ववर्त्तित्वमिति विशेष्यसन्निवेशो ऽपार्थकः ये किल कार्या नियतपूर्व्ववर्त्तिनस्तदुत्तरवर्त्तिनो वा पदार्थास्तेषामन्यथासिद्धत्वादेव कारणत्वाप्रसङ्गादिति चेन्न तावन्मात्रसद्भावेऽतीव गौरवात् अन्यथासिद्धपदार्थानां बहुतरत्वेन गुरुतरतद्भेदकूटनिवेशस्यात्यावश्यकत्वात् । अन्यथाऽन्यथासिद्धप्रतियोगिक भेदस्यान्यथासिद्धान्तरे सद्भावेनानन्यथा सिद्धत्वोक्तेर्नैरर्थक्यप्रसङ्गात् । उक्तनिवेशेत्वन्यथासिद्धप्रतियोगिकभेदस्यान्यथासिद्धान्तरे सत्त्वेऽपि तत्र नियतपूर्व्ववर्तित्वाभावेन कारणत्वप्रसङ्ग एव नास्तीति न गुरुतरभेदकूटनिवेशप्रयोजनम् । न च नियत पूर्व्ववर्त्तित्व निवेशाभावे ऽपि सामान्यभेदनिवेशेन नास्ति गुरुतरभेद कूटनिवेशस्यावश्यकत्वम् । तथाहि अन्यथासिद्धप्रतियोगिक

भेदवत्त्वं कारणत्वं नाभिधीयते किन्तर्हि अन्यथासिद्धत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम् तथा चोक्त गौरवदूषणासत्त्वे नोक्तनिवेशो निरर्थक एवेति चेदत्रोच्यते । यद्घटोत्पत्तिसमये रासभस्तत्र विद्यते तं घटं प्रति तस्य रासभस्य कारणत्वं कथं न तद्रासभ मन्तरेणापि घटोत्पत्तेर्नैवमिति तु वक्तुमशक्यम् एतद्घटस्यान्यदोपत्त्यभावात् एतदर्थमतिरिक्तमथापियद्भवेन्नियतावश्यकपूर्व्ववर्त्ति न इति पञ्चमो ऽन्यथासिद्धो ऽभ्युपगम्यते तथा च घट कार्य्यं प्रत्यवश्यक्लृप्तनियतपूर्व्ववर्त्तिभिन्नं यत्तादन्यथासिद्धम् दण्डचक्राद्यावश्यकपदार्थेभ्यः क्लृप्तेभ्योऽन्ये पदार्था घटकार्य्यं प्रत्यन्यथासिद्धा इति फलितम् । एवं सति घटकार्य्यं प्रति तन्त्वादिपदार्थानां कुतो नान्यथासिद्धत्वम् इष्टापत्तिरेव तु न कर्त्तुं शक्यते कार्य्यदेशविद्यमाना एव हि कार्य्योत्पत्तावनपेक्ष्यमाणा अन्यथासिद्धा भवन्ति अन्यथा अन्यप्रकारेण न तु तदर्थं सिद्ध उपस्थित इति व्युत्पत्त्याऽन्यथासिद्धशब्देनापि तादृशार्थस्यैव लाभात् दण्डत्वदण्डरूपादीनामपि तादृशानामेवान्यथासिद्धलक्षणोदाहरणत्वस्य ग्रन्थे उपलम्भाच्च । अतोऽवश्यक्लृप्तनियतपूर्व्ववर्त्तिभिन्नं यन्नि-



यतपूर्व्ववर्त्ति तदन्यथासिद्धमित्यभिधीयते तन्तोस्तु घटकार्य्यंप्रति न नियत पूर्व्ववर्त्तित्वमिति न तस्यान्यथासिद्धत्वम् । अथ घटकार्य्यं प्रति तन्तोर्य्यदि नान्यथासिद्धत्वं तदा तत्कार्य्यं प्रति कारणत्वमेव स्यात् तत्कार्य्यं प्रति तस्यान्यथासिद्धिशून्यत्वादेतदर्थं कारणलक्षणेऽपि नियतपूर्व्ववर्त्तित्वनिवेशस्यात्यावश्यकत्वम् ।

तथा चैवं पर्य्यवसन्नम् । घटकार्य्यंप्रत्यवश्यक्लृप्तनियतपूर्व्ववर्त्ति भिन्नं यन्नियनपूर्व्ववर्त्ति तदन्यथासिद्धम् तद्भिन्नं यन्नियतपूर्व्ववर्त्ति तत्कारणम् तन्तोस्तु नियतपूर्व्ववर्त्तित्वाभावेन घटकार्य्यं प्रति नान्यथासिद्धत्वं नापि कारणत्वमिति न कश्चिद्दोषः ।

वस्तुतस्तु अन्यथासिद्धिशून्यत्वमात्रं कारणत्वं नाभिधातुं शक्यमतिप्रसङ्गात् तथा हि अन्यथासिद्धत्वं यद्यवश्यक्लृप्तनियतपूर्व्ववर्त्तिभिन्नत्वमात्रं तदाऽवश्यक्लृप्तनियतपूर्व्ववर्त्तिभिन्नं यद्यत्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं कारणत्वमितिपर्य्यवसास्यति एवं सत्यवश्यक्लृप्तनियतपूर्व्ववर्त्तिभिन्ना ये दण्डचक्रादिव्यतिरिक्ता । असंख्याः पदार्थास्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्यासंख्यस्य प्रवेशे-

गौरवमतोऽन्यथासिद्धिकोटावपिनियतत्वंनिवेशनीयम् तथाच अवश्यक्लृप्तनियतपूर्व्ववर्त्तिभिन्नत्वे सति नियतपूर्व्ववर्त्तित्वमन्यथासिद्धत्वमिति निष्कर्षः। एवञ्चावश्यक्लृप्तनियतपूर्व्ववर्त्तिभिन्नं यद्यन्नियतपूर्व्ववर्त्ति तत्तव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वमिति पर्य्यवसितेऽनियतपूर्व्ववर्त्तिन्युदासीनेऽतिव्याप्तिवारणाय कारणलक्षणेऽपि नियतपूर्व्ववर्त्तित्वं निवेशनीयमिति।

अथ लाघवेनावश्यक्लृप्तनियतपूर्व्ववर्त्तित्वमेव कारणत्वमस्तु अलमनेनान्यथासिद्धिघटितगुरुभूतकारणलक्षणाभ्युपगमेनेति चेन्न लाघवानां चातुर्व्विध्येन प्रकृते लाघवानवकाशात् तथाहि अवश्यक्लृप्तनियतपूर्व्ववर्त्तित्वं नाम लघुनियतपूर्व्ववर्त्तित्वम् लाघवं चतुर्व्विधं भवति सम्बन्धकृतम् शरीरकृतम् उपस्थितिकृतम् कल्पनाकृतञ्चेति आद्यं यथा घटं प्रति दण्डः कारणमुत दण्डत्वमिति मीमांसायां दण्डस्य कारणत्वे स्वजन्यभ्रमिजन्यभ्रमिदत्त्वं तत्र सम्बन्धः दण्डत्वस्य तत्त्वे स्वाश्रयजन्यभ्रमिजन्यभ्रमिवत्त्वं तस्य सम्बन्धः स्यादिति सम्बन्धकृतलाघवेन दण्डएव कारणं न तु दण्डत्वमिति। द्वितीयं यथा प्रत्यक्षं प्रति महत्त्वमेव-



कारणम् महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् नत्वनेकद्रव्यत्त्वम् तद्धि अणुभिन्नद्रव्यत्वमिति तस्य जातित्वाभावेन गुरुशरीरकतया कारणतावच्छेदकत्वे गौरवात्। तृतीयं यथा गन्धोत्पत्तिं प्रति गन्धप्रागभावो रसप्रागभावो वा। कारणमिति विचारणायां गन्धप्रागभाव एव कारणम् प्रतियोगिनो गन्धस्य पूर्व्वमुपस्थितिसत्त्वेनोपस्थितिकृतलाघवात्। चतुर्थं यथा परमाणुपुञ्जस्वरूपोऽतिरिक्तो वाऽवयवी घटादिरिति मीमांसायां तस्य परमाणुपुञ्जस्वरूपत्वेऽयं घट इत्यादि प्रत्यक्षविषयताया अनन्तानन्तपरमाणुषु कल्पनाया आवश्यकत्वेनातिगौरवप्रसक्तिः। अतिरिक्तावयविस्वीकारे त्वेकस्मिन्नेव तस्मिन्निति कल्पनालाघवेनातिरिक्त एवावयवी घटादिरिति। किञ्च वह्निव्याप्यो धूमः धूमवान् पर्व्वत इति ज्ञानयोरनुमितिहेतुत्वस्यावश्यंवक्तव्यत्वेन तेनैव निर्वाहे वह्निव्याप्यधूमवान् पर्व्वत इति विशिष्टज्ञानस्य हेतुत्वं नाभ्युपगच्छन्ति मीमांसकाः कल्पनालाघवादिति इदं मतं समीचीनं न वेति त्वन्यदेतत्। ततश्चावश्यकत्वेन चतुर्व्विधलाघवघटितकारणत्वस्यावश्यमभ्युपगन्तव्यत्वेनान्यथासिद्धिघटित कारण

लक्षणापेक्षयाऽतीवगौरवप्रसक्तिरिति यथाश्रुतलक्षणमेव मनोरममिति। यद्यपि पूर्व्वोक्तकारणलक्षणेऽप्यवश्यक्लृप्तनियत पूर्व्ववर्त्तिभिन्नं यन्नियतपूर्व्ववर्त्ति तदन्यथासिद्धमित्येवं परिष्कारेण लघुनियतपूर्व्ववर्त्तित्वादीनां प्रवेशादत्रैव गौरवं प्रतिभाति तथापि यत्र यत्र प्रामाणिकानामन्यथासिद्धत्वव्यवहारस्तद्विषयत्वमेवान्यथासिद्धत्वमित्येवं निर्व्वचनेन प्रामाणिकान्यथासिद्धत्व व्यवहारविषय त्वमन्यथा सिद्धत्वमित्यर्थे न लघुनियतपूर्व्ववर्त्तित्वादीनां प्रवेश इति सुव्यक्तमेव मूलोक्तलक्षणे लाघवमित्यलमनल्पजल्पनेन। वस्तुतस्तु लघुनियतपूर्व्ववर्त्तिभिन्नं यद्यन्नियतपूर्व्ववर्त्ति तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटस्यैव प्रवेशेन तत्तद्व्यक्तिपरिचायकलघुनियतपूर्व्ववर्त्तित्वस्य कारणताकोटिवहिर्भावान्मूलोक्तलक्षणे सुव्यक्तमेव लाघवमित्यलमतिविस्तरेणेति।

अथ नियता पूर्व्ववर्त्तितेत्यत्र नियतत्वं व्यापकत्वम् तच्च स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् धूमसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्य वह्नौ सत्त्वेन तत्र व्यापकत्वं सुघटम्। नचैवमभ्युपगमे धूमाधिकरणे घटत्वेन वह्निर्नास्तीत्याद्यभावमादाय वह्नौ धूमव्यापकत्वव्यभिचार इति वाच्यम् स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वं व्यापकत्वमित्यभ्युपगमात्। नचैवमुक्तदोषवारणेऽपि धूमाधिकरणे वह्नित्वेन घटो नास्तीत्यभावं वह्निघटोभयाभावं वाऽऽश्रित्य वह्नौ धूमव्यापकत्वव्यभिचारस्तदवस्थ एवेति चेदत्र केचित् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वाऽभिन्नप्रतियोगितावच्छेदकधर्म्मभिन्नधर्म्मवत्त्वं व्यापकत्वम्। घटो नास्ति वह्निर्नास्तीत्यादि सामान्याभावस्थले प्रतियोगितास्वरूपं प्रतियोगितावच्छेदकमभ्युपगम्यते। उभयाभावस्थले व्यधिकरणधर्म्मावच्छिन्नाभावस्थले सामान्यरूपेण विशेषाभावस्थले विशेषरूपेण सामान्याभावस्थले च न प्रतियोगितास्वरूपं प्रतियोगितावच्छेदकं किन्त्वतिरिक्तमेवेति बहूनां न्यायविदां सम्मतम्, तथा च धूमाधिकरणे घटत्वेन वह्निर्नास्ति वह्नित्वेन घटोनास्तीत्यादि व्यधिकरणधर्म्मावच्छिन्नाभावस्थलेऽभयाभावस्थले च धूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वाभिन्नप्रतियोगितावच्छेदकधर्म्मभेदस्य वह्नित्वे सत्त्वेन तद्धर्म्मवत्त्वस्य वह्नौ सद्भावेन व्यापकत्वं सुलभमिति प्राहुः॥

वस्तुतस्तु पूर्व्वोक्तसकलदूषणनिराकरणाय स्वसमा
नाधिकरणात्यन्ताभावीयप्रतियोगिताविशिष्टरूपभिन्नरूपवद्ध
र्म्मवत्त्वं व्यापकत्वम् वैशिष्ट्यञ्च स्वनिरूपितावच्छेदकतात्वा
वच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगिता तावच्छेकत्व स्वनिरू
पितानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्र-
तियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वैतदुभयसम्बन्धेन त
थाचोक्त व्यधिकरणधर्म्मावच्छिन्नाभावद्वयस्थले धूमसमाना-
धिकरणा त्यन्ताभाव प्रतियोगिताविशिष्टं रूपं न किमपीतित-
द्भेदस्य वह्नित्वगतैकत्वे सत्वेन तादृश रूपवद्वह्नित्वधर्म्मवत्त्वस्य,
वह्नौ सद्भावेन व्यापकत्वं निर्व्बाधम् वह्निघटोभयाभावस्थले
च धूमसमानाधिकरणा त्यन्ताभावप्रतियोगिताविशिष्टंरूपं वह्नि
त्वघटत्वोभयत्वगतं त्रित्वमिति तद्भेदस्य वह्नित्वगतैकत्वे सत्वे
न तत्रापि वह्नौ व्यापकत्वं सुलभम् । न चैवमपि वह्निघटो
भयाभावीयप्रतियोगितानिरूपितावच्छेदकताया वह्नित्ववृ-
त्तित्व विशिष्टावच्छेदकतात्वेन तदवच्छेदकतात्वेऽथवा रूपेण
वह्नित्वे पर्य्याप्तत्वेनोक्तोभयाभावमनुसृत्य दोषस्तदवस्थ
एवेति चेदत्रोच्यते स्वनिरूपितावच्छेदकतात्वावच्छिन्न
प्रतियोगितेऽत्यस्यनिरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छे-



दकताभिन्ना सत्यवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना याऽ
वच्छेदकता तदनिरूपिता प्रतियोगितेत्यर्थः प्रकृतेतदुभया-
वच्छेदकताभिन्नावच्छेदकता वह्नित्ववृत्तित्वविशिष्टत्वनि-
ष्ठा तत्तानिष्ठा वा तन्निरूपितत्वस्यैवोभयाभावीयप्रतियो
गितानिरूपितावच्छेदकतानिष्ठप्रतियोगितायां सद्भावेन न
दोष इति संक्षेपः ॥

अथ समवायिकारणत्वासमवायिकारणत्वनिमित्तका-
रणत्वभेदेन त्रिविधकारणत्वे प्रथमं समवायि कारणत्वं
किमिति जिज्ञासायामाह विश्वनाथपञ्चाननः यत्समवेतं कार्य्य-
मुत्पद्यत इत्यादि स्वकारणताऽवच्छेदक यद्धर्मावच्छिन्ने यद्धर्म्मा
वच्छिन्नं समवायसम्बन्धेनोत्पद्यते तद्धर्म्मावच्छिन्नं प्रति तद्ध-
र्म्मावच्छिन्नं समवायि कारणमित्यर्थः। घटत्वाद्यवच्छिन्नस्य-
स्वकारणतावच्छेदककपालत्वाद्यवच्छिन्नेसमवायसम्बन्धेनो-
त्पत्त्या घटत्वाद्यवच्छिन्नं प्रति कपालत्वाद्यवच्छिन्ने समवा-
यिकारणत्वं निर्व्बाधम् । स्वकारणतावच्छेदकेत्युक्त्या
द्रव्यत्वादेर्न्न घटादिसमवायि कारणतावच्छेदकत्वमिति ।

अथ किं नामासमवायिकारणत्वमिति चेदत्र के
चित् कार्य्यनाशप्रयोजकनाशप्रतियोगित्वमित्यभ्युपगच्छन्ति

तन्न युक्तम् द्वित्वादिनाशप्रयोजकनाशप्रतियोगिन्यामपेक्षाबुध्याम् घटादिनाशप्रयोजकनाशप्रतियोगिषु कपालादिषु चातिव्याप्तेः । किन्तु समवाय स्वसमवायिसमवेतत्वैंतदन्यतरसम्बन्धेन कार्य्यसमवायिकारणप्रत्यासन्नत्वे सति कारणत्वे सत्यात्मविशेषगुणभिन्नत्वं सामान्यतोऽसमवायिकारणत्वम् । घटासमवायिकारणकपालद्वयसय्योंगस्य घटरूपासमवायिकारणकपालरूपस्य च संग्रहाय क्रमेण समवायस्वसमवायिसमवेतत्वयोः प्रवेशः घटरूपं प्रति घटस्यासमवायिकारणत्ववारणाय समवायिकारणप्रत्यासन्नत्वोक्तिः । आत्मविशेषगुणानान्तु कुत्राप्यसमवायिकारणत्वं नास्तीति तद्भिन्नत्वं सामान्य-लक्षणे निवेशनीयम् ।

अथात्मविशेषगुणानामसमवायिकारणत्वाभावो न युक्तः । तेषामसमवायिकारणत्वेऽप्यापत्तिविरहात् । न हि द्रव्यनाशस्येव गुणनाशस्यासमवायिकारणनाशजन्यत्वं येन तथोपगमे काचिदापत्तिः प्रसज्ज्येत नह्यग्निसंयोगरूपासमवायिकारणनाशे पाकजरूपादीनां नाश इति चेन्न । नीलतन्तुभ्यो रक्तपटोत्पत्तिवारणाय विशेषगुणानां स्वसजातीयविशेषगुणासमवायिकारणकत्वाङ्गीकरणस्यावश्यकत्वेन ज्ञानादीनामिच्छादिकंप्रति साजात्याभावेनासमवायिकारणत्वासम्भवात् । नच विशेशषणज्ञानादिजन्ये विशिष्टज्ञानादौ स्वसजातीये तथोपगमे क्षतिविरहः घटादिस्मृत्यादिरूपविशेषणज्ञानजन्ये घटाभाववद्भूतलमित्यादिप्रत्यक्षादिज्ञाने स्मृतित्वेन साजात्याभावात् । व्याप्तिप्रत्यक्षजन्यायामनुमितौ प्रत्यक्षत्वेन साजात्याभावाच्च । ज्ञानत्वेन साजात्यसत्त्वेऽपि स्ववृत्तियावज्जातिमत्त्वेनसाजात्याभावात् यत्किञ्चिज्जातिमत्वेन साजात्याभ्युपगमे रूपत्वेन साजात्यमनुसृत्य नीलतन्तुभ्यो रक्तपटोत्पत्त्यापत्तिवारणासम्भवात् । न च प्रत्यक्षात्मकरूपादिविशेषणज्ञानजन्यं यत्र प्रत्यक्षात्मकं रूपवान् घट इत्यादि विशिष्टज्ञानं तत्र विशेषणज्ञानेऽस्त्वसमवायिकारणत्वमिति वाच्यम् क्वचित्तस्यासमवायिकारणत्वोपगमेऽसमवायिकारणपदशक्यतावच्छेदककोटाविच्छादि कारणज्ञानादिभेदानामनुमित्यादिकारण व्याप्तिस्मृत्यादि भेदानां ज्ञानसुखादिकं प्रत्यदृष्टादीनामसमवायिकारणतावारणायादृष्टादिभेदानाञ्च निवेशेऽतीवगौरवेणोक्तप्रत्यक्षात्मकविशेषणज्ञानजन्यप्रत्यक्षात्मकरूपवान् घट इतिविशिष्टज्ञानादि-

स्थले विशेषणज्ञानस्यासमवायिकारणत्वानङ्गीकार एव
लाघवमिति विभावनीयम् ॥

अथ किन्नाम निमित्तकारणत्वम् ! समवायिकारणा-
समवायिकारणभिन्नत्वे सति कारणत्वमिति चेन्न दण्डादौ
स्वगतरूपं प्रति समवायिकारणत्वसत्त्वेन घटादिकं प्रति
निमित्त कारणत्वं न स्यात् समवायिकारणभेदाभावादिति
चेन्न स्वसमवायिकारणत्वाभाववत्त्वेसति स्वासमवायिका-
रणत्वाभाववत्त्वे च सति स्वकारणत्वं स्वनिमित्तकारणत्व-
मित्यभ्युपगमात् ।

अथ ध्वंसं प्रति समवायिकारणत्वासमवायिकारण-
त्वयोरप्रसिद्धत्वेन तं प्रति निमित्तकारणत्वमपि दण्डादा-
वव्याप्तम् न च स्वसमवायिकारणत्व स्वासमवायिकारणत्वै-
तदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व-स्वका-
रणत्वै तदुभयसम्बन्धेन स्वविशिष्टत्वं स्वनिमित्तकारणत्वमि-
ति चेदत्रेदं विवेचनीयम् कालानुयोगिक घटादि प्रतियोगिक
संयोगस्य समवायिकारणताया ≍ काले घटादौ च
सत्त्वेन जन्यानां जनकः काल इति काले घटादिसंयोग-
निमित्तकारणतायाश्च सद्भावेन भवदुक्तरीत्येदानीं स्वाभा-



ववत्त्वसम्बन्धासत्त्वेन काले निमित्तकारणत्वं न सम्पद्येतेति
चेन्न जन्यानां जनक इत्यत्र संयोगस्य समवायिकारण-
तयाऽपि जनकत्वोपपत्तौ तन्निमित्तकारणत्वोपगमे प्रयोज-
नविरहात् । अभावप्रतियोगितावच्छेदकस्वसमवायिकारण-
त्वसम्बन्धस्थाने विभुत्वासमानाधिकरण स्वसमवायिकार-
णत्वसम्बन्धप्रवेशाच्च । स्वसमवायिकारणतात्व स्वासमवा-
यिकारणतात्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभा-
ववत्कारणतावत्त्वमेव स्वनिमित्तकारणत्वमित्यभ्युपगनेना-
दोषाच्च ॥

अथ सकलजन्यपदार्थनिदानत्वात्परमाणूनां तद्विषये
मीमांसा प्रस्तूयते तथाहि परमाणो ≍ परमाण्वन्तरेण
संयोगो व्याप्यवृत्तिरव्याप्यवृत्तिर्व्वा ! नाद्यः अप्रसिद्धत्वात्
तादवस्थ्यप्रसङ्गाच्च। नापि द्वितीयः संयोगस्य सर्व्वत्र
सावच्छिन्नस्यैव दृष्टत्वेन परमाणोर्न्निरवयवत्वेन तादृशसं-
योगस्यैवासम्भवात् सांशत्वेऽनित्यत्वापत्तेः तदभ्युपगमेऽ
वयवधाराया अविश्रान्तत्वेन मेरुसर्षपयोरपि साम्यमापद्येत
किमत्रवक्तव्यम् । अत्रोच्यते अव्याप्यवृत्तिरेव परमाणुसं-
योगः । सावयवपदार्थसंयोगस्थलेऽवयव एवावच्छेदकः

यो यः संयोगः स किञ्चिदवयवावच्छिन्न एवेति न व्याप्तिः किन्तर्हि यो यः सावयवसंयोगः स किञ्चिदवयवावछिन्नएवे न्येव व्याप्तिरभ्युपगम्यते । परमाणुसंयोगस्थले प्राच्यादि-दिक् तद्वृत्तिमूर्त्तविशेषो वाऽवच्छेदकोऽभ्युपगम्यते प्रतीति-रप्येषा भवति अयं परमाणुरनेन परमाणुना प्राच्यां दिशि सय्युँक्तः अनेन परमाणुना प्रतीच्यां दिशीत्यादिरूपा एवं सति न कश्चिद्दोष इति ॥

अथ कारणत्वविवेकप्रस्तावे बीजाङ्कुरयो ≍ कीदृश ≍ कार्य्यकारणभावः । अङ्कुरं प्रति बीजं कारणमिति चेन्न कुसूलस्थबीजादप्यङ्कुरोत्पत्तेः । तद्वारणाय प्रतिबीजं तत्तत्क्षणभेदेन नानात्वमभ्युपगम्यते तथा च क्षेत्रस्थबी-जेभ्य एवाङ्कुरोत्पत्तिदर्शनेन तत्रैव कुर्व्वद्रूपत्वं कल्प्यते अङ्कुररूपकुर्व्वत्वमिति यावत् कुर्व्वद्रूपत्वञ्चाङ्कुरजनकताव-च्छेदकतया सिद्धो जातिविशेषः सचांकुरोपधायकक्षेत्रस्थ-बीजव्यक्तिमात्रवृत्तिर्वीजत्वव्याप्य ≍ कल्प्यते तु कुसू-लस्थवीजेषु फलवलादिति न ततोऽङ्कुरोत्पत्तिरिति क्षणिक-वादिनो बौद्धाः ।

नैयायिकास्तु प्रतिवीजव्यक्त्यानन्त्याभ्युपगमेऽतीव



गौरवमतो वीजस्य समवायिकारणत्वं भूसलिलसंयोगस्य सहकारित्वं कल्प्यत इति कुसूलस्थवीजेषु तादृशसहकारि-कारणविरहान्नततोऽङ्कुरोत्पत्तिः । अथाकिञ्चित्करस्य सह-कारित्वे कार्य्यमात्रं प्रति पदार्थमात्रस्य सहकारित्वप्रसङ्गोऽत ≍ किञ्चित्करस्यैव सहकारित्वमभ्युपगन्तव्यमिति य ≍ किञ्चिदुपकरोति स सहकारीति पर्य्यवस्यति प्रकृतेऽपि भूसलिलसंयोगो वीजेऽङ्कुरानुकूलं कमप्युपकारं जनयती-त्यवश्यमभ्युपेतव्यं तथाचानवस्था त्रिपुटी प्रसज्यते तथा हि अंकुरानुकूलमुपकाररूपकार्य्यं प्रति बीजमात्रस्य कार-णत्वं भूसलिलसंयोगस्यापि वा ? आद्ये कुसूलस्थबीजतोऽपि तादृशोपकारापत्तिरेतदर्थं भूसलिलसंयोगस्य सहकारि-त्वमभ्युपेयम् ततश्च वीजे भूसलिलसंयोगजन्यमंकुरानुकू-लोपकारानुकूलोपकारान्तरं जायते । अथ द्वितीयोपकारं प्रत्यपि बीजमात्रस्य कारणत्वे कुसूलस्थबीजतोऽपि तदुप-कारोत्पत्तिप्रसङ्ग एतदर्थं द्वितीयोपकारं प्रत्यपि भूसलिल-संयोगस्य सहकारित्वं मन्तव्यम् भूसलिलसंयोगो द्विती-योपकारानुकूलं तृतीयमुपकारं जनयतीति यावत् एवं तृतीयोपकारेऽपि पर्य्यनुयोगः वीजे भूसलिलसंयोगस्त्व-

तीयोपकारानुकूलं चतुर्थमुपकारं जनयतीत्येवमुपकारधारानवस्थाः ।

एवमंकुरोत्पत्तौ भूसलिलसंयोगमात्रस्य कारणत्वे केवलभूसलिलसंयोगादंकुरोत्पत्तिप्रसङ्ग एतदर्थं बीजस्य सहकारित्वमभ्युपगन्तव्यम् तथा चांकुरानुकूलं भूसलिलसंयोगनिष्ठमुपकारं वीजं करोतीति पर्य्यवसितम् । अथ तमुपकारं प्रति भूसलिलसंयोगमात्रस्य कारणत्वे केवल भूसलिलसंयोगादपि तदुपकारप्रसङ्ग एतदर्थं तमुपकारं प्रति बीजस्य सहकारित्वमभ्युपेयम् अथ सहकारिकारणमवश्यं कमप्युपकारं जनयतीति नियमस्तथा चांकुरानुकूलोपकाररूपकार्य्यानुकूलमुपकारं भूसलिलसंयोगे बीजं जनयति । एवमेव द्वितीयतृतीयाद्युपकारेष्वपि पर्य्यनुयोग इत्येवमुपकारधाराप्रसङ्गः ।

अथांकुरं प्रत्युपकारमात्रस्य कारणत्वे बीजं भूसलिलसंयोगश्चान्तरेणैव केवलोपकारमात्रादंकुरोत्पत्तिप्रसङ्ग एतदर्थमुपकारस्य कारणत्वं भूसलिलसंयोगसहकृतबीजस्य सहकारित्वमङ्गीकरणीयम् तथा च भूसलिलसंयोगसहकृतबीजमुपकारेऽङ्कुरानुकूलमुपकारं विदधाति अथ द्विती-



योपकाररूपकार्य्यं प्रति प्रथमोपकारमात्रस्य कारणत्वे भूसलिलसंयोगसहकृतबीजानपेक्षकेवलोपकारादप्युपकाररूपकार्य्यप्रसङ्ग एतदर्थं द्वितीयोपकारं प्रति भूसलिलसंयोगसहकृतबीजस्य सहकारित्वमवश्यमभिधातव्यम् अर्थात्तृतीयमुपकारं तज्जनयतीति एवमेव तृतीयचतुर्थादिषूपकारेष्वपि पर्य्यनुयोग इत्येवमुपकारधाराप्रसङ्गः । किमत्र वक्तव्यम् । अत्रोच्यते अंकुरं प्रति यथा बीजं कारणं तथा भूसलिलसंयोगोऽपि स्वतन्त्र एव कारणम् न तु भूसलिलसंयोगो बीजे किञ्चित्करोतीति सहकारित्वं नकिञ्चित्करत्वम् किन्तु तदवच्छिन्नासमवधानप्रयुक्तफलोपधायकत्वाभाववत्स्वावच्छिन्नकत्वम् । यथा घटकार्य्यं प्रति चक्रस्य दण्डः सहकारी तत्र तत्पदेन दण्डत्वं तदवच्छिन्नासमवधानप्रयुक्तघटरूपफलोपधायकत्वाभाववच्चक्रत्वावच्छिन्नकत्वस्य दण्डे सद्भावेन तस्मिन् सहकारित्वं सूपपादम् । एवं दण्ड ≍ कारणं चक्रं सहकारीति तत्राप्यूहनीयमेतदित्यलमतिविस्तरेणेति ॥

अथान्यथासिद्धिशून्यस्येतिकारणलक्षणेऽन्यत्वस्य प्रविष्टत्वेन तस्य भेदरूपत्वेन तन्मीमांसाया अपि परमावश्यकत्वेन सेदानीं प्रस्तूयते घटो न पटः घटभिन्न ≍ पटः

अघटᳶ पटः इत्याद्यनेकवाक्यप्रतीयमानᳵ कोऽयं भेदपदार्थो नाम ? स्वरूपात्मको वा ? अन्योन्याभावात्मको वा ? वैधर्म्म्यात्मको वा ? पृथत्वात्मको वा ? नाद्यः, तथा हि स्वरूपात्मकशब्देन पटे घटभेदः प्रतीयमानᳶ पटस्य स्वरूपमित्येवाभिधीयते अत्रैतद्विचारावसरः घटभेदस्य पटस्वरूपत्वाभ्युपगमे भेदे घटस्य विशेषणत्वेन घटस्यापि पटस्वरूपत्वापत्तिः। न च घटभेदे प्रविष्टो घटो न विशेषणं किन्तर्हि उपलक्षणम् अर्थाद्भेद ᳶ पटस्य स्वरूपम् परन्तु स भेदो भेदस्वरूपाप्रविष्टेनोपलक्षणीभूतेन घटेन निरूप्यत इति चेन्न निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वात्। किञ्च भेदस्य पटस्वरूपत्वे घटस्य भेदप्रतियोगित्वेन पटस्यभेदस्वरूपत्वेन घटस्य पटप्रतियोगित्वमप्यापद्येत। किञ्च पटप्रतियोगित्वं यदि घटस्य स्वरूपं तदा पटेऽपि घटस्वरूपत्वापत्तिः। यदि च पटप्रतियोगित्वं घटस्य धर्म्मस्तदा पटोऽपि घटधर्म्मः स्यात् अनेनैव प्रकारेण घटोऽपि पटधर्म्मः स्यात्तथाच घटपटयो ᳶ परस्परमाश्रितत्वाश्रयत्वसद्भावेन घटारूढᳶ पटस्तत्पपटारूढश्च स एव घट इति प्रतीतिरापद्यमाना केन निवार्य्येत नेयं प्रतीतिᳵ कस्यापि प्रमाणस्य गोचरः।



नापि घटपटयोर्भेदो नाम तयोरन्योन्याभाव इति द्वितीय ᳶ पक्षः। तथा हि पटे घटान्योन्याभाव ᳶ पटस्य स्वरूपं वा धर्म्मो वा ? आद्ये घटस्यापि पटस्वरूपत्वापत्तिः द्वियीये घटस्यापि पटधर्म्मत्वापत्तिः अनयैव रीत्या पटस्यापि घटधर्म्मत्वापत्तौ परस्पराश्रयत्वाश्रितत्वसत्त्वप्रयुक्त ᳶ पूर्व्वोक्तदोषः स्यादेव। एवं विश्वप्रतियोगिकान्योन्याभावस्य घटधर्म्मत्वे विश्वस्यापि घटधर्म्मत्वापत्तिः। तस्य घटस्वरूपत्वे विश्वस्यापि घटस्वरूपत्वापत्तिः। यदि तु घपटान्योन्याभावो नाम घटपटतादात्म्याभाव इत्यभिधीयते तदा घटपटतादात्म्यस्यात्यन्तमप्रसिद्धत्वेन तदभावस्याप्यप्रसिद्धत्वापत्तिः। न हि बन्ध्यापुत्रविशिष्टस्तदुपलक्षितो वा कश्चिदभाव ᳶ प्रामाण्यमावोढुं शक्नोति। न च घटपटान्योन्याभावो नाम घटप्रतियोगिक ᳶ पटाश्रितोऽभावः पटप्रतियोगिकश्च घटाश्रितोऽभाव इति नाप्रसिद्धिर्दोष इति वाच्यम् एवं सति संसर्गाभावादन्योन्याभावस्य वैलक्षण्यानापत्तेः। न च तादात्म्याभावः तादात्म्यसम्बन्धेनाभाव इति व्यपदेशभेदानुरोधेन तादात्म्यं प्रतियोगिकोटावन्तर्भाव्य तादात्म्यस्य प्रतियोगितावच्छेदकसंसर्गतामुपगम्य च

संसर्गाभावान्योन्याभावयोर्भेद उपपादनीय इति वाच्यम् घटपटतादात्म्यस्याप्रसिद्धेः । न च घटपटतादात्म्यं न प्रतियोगि येनात्यन्तासद्विषयकत्वमभावप्रत्ययस्यापद्येत किन्तु घटतादात्म्यं प्रतियोगि तथा च नात्यन्तासद्विषयकत्वमभावप्रत्ययस्येति चेन्न घटतादात्म्यस्य पटे निषेधः संसर्गाभाव एवेति पुनस्तयोर्वैलक्षण्यानापत्तेः । न च तादात्म्यं न प्रतियोगि किन्तर्हि घटादिरेव तादात्म्यन्तु प्रतियोगितावच्छेदकमिति संसर्गाभावादस्य भेदः घटमात्रतादात्म्यस्य प्रतियोगितावच्छेदकत्वे संसर्गाभावादविशेषात् उभयतादात्म्यस्य तत्त्वे ऽन्योन्याभावप्रतीतेरसद्विषयकत्वापातात् न च घटपटान्योन्याभावो नाम घटे पटत्वं नास्ति पटे च घटत्वं नास्तीति परस्परधर्म्माभाव एवेति चेन्न घटत्वे पटत्वे च न कश्चित्तादृशो धर्म्मोऽस्ति योऽन्योन्यस्मिन्निषेद्धुं युज्येतेति तयोस्तादात्म्यापत्तौ घटे घटत्वं पटे पटत्वञ्च निषेधत्प्रमाणं घटत्वपटत्वशून्यत्वमुभयस्मिन्नावेदयतीति । अयमाशयः । घटत्वपटत्वयोरन्योन्यस्मिन्नन्योन्याभावे सिद्धे घटपटयोरन्योन्याभावः सिध्येत् घटत्वपटत्वे एव तु न परस्परं भिन्ने भेदकधर्म्माभावात् । अथ घटत्वपटत्वे स्वगतघटत्वत्व पटत्वत्वादिरूपवैधर्म्म्यभेदभिन्ने तर्हि ते अपि स्वगतवैधर्म्म्यान्तरभिन्ने ते अप्येवमित्यनवस्थापात इति क्वचिद्गत्वाऽभेदे क्रमेण घटपटयोरपि भेदो दुर्ल्लभ इति ॥



एवमेव न वैधर्म्म्यमपि भेदः वैधर्म्म्ये घटत्वपटत्वादौ वैधर्म्म्यमस्ति न वा ? अस्ति चेदात्माश्रयः नास्तिचेद्घटत्वपटत्वरूपवैधर्म्म्ययोरैक्ये स्वाश्रयादेव स्वाश्रयस्य कथं भेदः स्मात् । अथ च योऽयं वैधर्म्म्यरूपोऽन्यरूपो वा घटादिभेदः स किं घटादितो भिन्ने विद्यतेऽभिन्ने वा ? नाद्यः, येन भेदेन भिन्नत्वं स भेदःकिं भिन्नेऽभिन्नेवेत्य नवस्थाऽऽपत्तेः। यद्यनन्ता भेदा अभ्युपगम्यन्त इति तेषां कथमाश्रयसम्बन्धः ? क्रमेण ? युगपद्वा ? नाद्यः, अल्पसमयस्थायिनि घटादौ तेषामनन्तानां भेदानां सम्बन्धासम्भवात् नापि द्वितीयः, जायमाने पदार्थे युगपदनेकभेदाभ्युपगमे किम्भेदविशिष्टे किम्भेदसम्बन्ध इत्यत्र विनिगमकाभावात् परस्परकलहनिराकरणासम्भवात् अग्रिमाग्रिमभेदाभ्युपगमे तेनैवान्यथासिद्धौ पूर्व्वपूर्व्वभेदलोपप्रसङ्गः किम्भेदभिन्ने किम्भेदसन्निवेश इत्यत्र न विनिगमकम् अनन्ता भेदा एकत्र वर्त्तन्त इत्यत्र प्रमाणाभाव इत्यचिकित्स्यत्रिदोषग्रस्तोऽयं

पक्षः। यदि चाभिन्ने भेदोऽभ्युपगम्यते तदा घटादिर्या व्यक्तिरेका प्रतीयते साऽपि तेनैव भेदेनानेका स्यादित्येकाभावेनानेकव्यवस्थाया अप्यसम्भवेन नित्यत्वे सत्यनेकसमवेतत्वमित्याद्यनेकघटितानेकलक्षणानामसङ्गतिᳶप्रसज्येत।

एवमेव पृथक्त्वं भेद इत्यपि न वक्तुं साम्प्रतम् सोऽपि भेदः स्वाश्रये भिन्नेऽभिन्ने वा विद्यत इत्युक्तदोषकलुषित एव स्यात्। स्वाश्रयेण सह स्वस्मिन्नभेदभयेन यदि स एव भेदो निविशते तदाऽऽत्माश्रयः। अन्यश्चेत्तस्मिन्नेवं तस्मिन्नप्यन्य इति क्रमेणानवस्था क्वचिद्गत्वा भेदभेदाश्रययोर्भेदानभ्युपगमे तदैक्यद्वारा मूलपर्य्यन्तमेकताऽऽपद्येत। किञ्च पृथक्त्वस्य गुणत्वेन गुणकर्म्मादावभावन तदभेदेन द्रव्याणामप्यभेद आपद्येत अत्रोच्यते यद्यप्येवमुक्तप्रकारैर्भेदपदार्थो न निर्व्वचनीयो भवितुमर्हति तथाऽपि भूतलं न घट इत्यादिप्रतीतिसिद्धोऽनुयोगिताविशेषरूपधर्म्मो भेदत्वं तदाश्रयो भेद इति॥

अथान्यथासिद्धिशून्यस्येतिकारणलक्षणस्याभावघटितत्वेन तस्यापि मीमांसनीयत्वेनाभावमीमांसा प्रस्तूयते



किमिदमभावत्वं नाम? न तावद्भावभिन्नत्वम्, अभावभिन्नत्वं भावत्वं भावभिन्नत्वञ्चाभावत्वमित्यभिधानेनान्योन्याश्रयापत्तेः। यद्यभावभिन्नत्वं नाभिधीयते भावत्वम् किन्तर्हि स्वरूपसत्त्वमित्युच्यते तदाऽभावस्यापि स्वरूपसत्त्वेनभावत्वापत्तिः। न चास्तीतिप्रतीतिविषयत्वं भावत्वमिति वाच्यम् घटस्याभावोऽस्तीतिप्रतीतेरपलपितुमशक्यत्वेनास्तीतिप्रतीतिविषयत्वस्याभावेऽपि सत्त्वेन भावत्वापत्तेः। घटाभावो नास्तीतिप्रतीतिविषयत्वेऽपि घटस्याभावत्वस्येव अस्तीतिप्रतीतिविषयत्वेऽप्यभावस्य भावत्वाभावात्। तथाच भावभिन्नत्वमभावत्वं नाभिधातुं साम्प्रतम्। न च निषेधात्मकत्वमभावत्वमिति वाच्यम् निषेधस्यप्रतिक्षेपात्मकत्वे भावाभावयोᳶपरस्परप्रतिक्षेपात्मकत्वेन भावेऽप्यभावत्वापत्तेः। अभावार्थकत्वेऽन्योन्याश्रयापत्तेः। निषेधमुखेनप्रतीयमानत्वमप्यनेनैव निराकृतम्। भावविरोधित्वमभावत्वमिति चेन्न तद्धि भावत्वावच्छिन्नविरोधित्वम् तद्विशेषविरोधित्वंवा नाद्यम्, असम्भवात् घटाभावादेर्भूतलत्वाद्यविरुद्धत्वात् नापिद्वितीयम्, केषाञ्चिद्भावानामपि तथाभावादभावत्वापत्तेः। न च सहानवस्थानं विरोधो

विवक्ष्यते स भावानां नास्तीति न दोष इति वाच्यम् गोत्वाश्वत्वादौ तस्यापि सद्भावात्परस्परमभावत्वापत्तेः। एकविधावन्यनिषेधोविरोध इति चेन्न घट≍पटो वाऽस्तीति प्रश्ने घटविधौ पटनिषेधोऽस्तीति तत्रातिव्याप्तेः। नास्तीति-प्रतीयमानत्वमभावत्वमितिचेन्न घटाभावो नास्तीतिघटस्यापि तथाप्रतीयमानत्वेनाभावात्वापत्तेः। प्रतियोगिनिरूपणाधीननिरूप्यमाणत्वं तदिति चेदत्रेदं विवेचनीयम् प्रतियोगित्वं परत्वं वा विरोधित्वव्वाँ ? न प्रथमम्, तथासति परनिरूपणाधीननिरूप्यमाणत्वमिति पर्य्यवसानेन ज्ञानसंयोगादावतिप्रसङ्गात् नापि द्वितीयम्, विरोधानिर्व्वचनेन दुर्ग्रहत्वापत्तेः। असन्निरूपणाधीननिरूप्यमाणत्वं तदितिचेन्न अतीतानागतज्ञानसंयोगादावतिप्रसङ्गात्। अत्रोच्यते भूतले घटो नास्तीत्यादिप्रतीतिसिद्धोऽनुयोगिताविशेषोऽभावत्वम् तदाश्रयोऽभावइति संक्षेपः॥

अथ घटादिपदार्थानां मुहुर्म्मुहुर्घोषणेनैक्ससम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीत्यवसरसङ्गत्येदमपि विवेचयितुमावश्यकम् तथाहि घटो घटत्वरहितस्तत्सहितो वोत्पद्यते ? आद्ये, घटस्येव घटत्वस्याप्यनित्यत्वापत्तिः



द्वितीये, घटोत्पत्तौ तस्मिन् कथं घटत्वमायातमिति वक्तव्यम् घटान्तरादायाति तदिति, चेत्तर्हि तस्मिन् घटान्तरे घटत्वराहित्यापत्तिः यदि किञ्चिदंशेनास्मिन् घटे किञ्चिदंशेन घटान्तरेऽपि विद्यते घटत्वमित्यभिधीयते नेदमप्यभिधातुं साम्प्रतम् सांशत्वेनानित्यत्वापत्तेः अथ घटोत्पत्तौ तस्मिन्नेव देशे कस्मिश्चित्पदार्थआसीद्घटत्वं तदेवायाति घट इत्यभिधीयते तर्हिसोऽपि पदार्थविशेष≍कुतो नेत≍प्राक् घटशब्दाभिधीयमान आसीत् तथाचोपनिवद्धमिदं बौद्धीयं पद्यमुपस्कारे सर्वदर्शनसंग्रहे च तन्मतखण्डनावसरे।

नायाति न च तत्रासीन्नचोत्पन्नं न चांशवत्।
जहातिपूर्व्वंनाधारमहो व्यसनसन्ततिः॥ १॥

अत्रोच्यते, घटत्वपटत्वादयः सर्व्वा अपि जातयो-व्यापिकाः सन्तीति सर्व्वत्रैवावतिष्ठन्ते ता इत्याकाशादिनेव घटत्वादिनाऽपि घटादय उत्पद्यमाना एव सम्बध्यन्त इत्याकाशादिवद्घटत्वादिकमपि नित्यमेवेति। नच व्यापकत्वात्सर्व्वत्र सर्व्वासां जातीनां सद्भावाभ्युपगमे पटादावप्ययं घट इत्यादि प्रत्ययापत्तिरिति वाच्यम्

घटत्वं समवायेन घट एव विद्यतेऽन्यत्र तु स्वरूपसम्बन्धेनोऽयमयं घट इति समवायसम्बन्धावगाहिन्याः प्रतीतेः पटादावसम्भवात् ॥

अथ घटत्वं कस्मिन्नभ्युपगम्यते घटत्वरहिते तत्सहिते वा ? नाद्यः, पटादौ घटत्वस्य वृत्तित्वप्रसङ्गात् घटे तदप्रसङ्गाच्च । नापि द्वितीयः, तथासत्यात्माश्रयप्रसङ्गात् । अत्राभिधीयते अयं घटोऽयं घट इत्यबाधितप्रतीतिर्य्यस्मिन् संस्थानविशेषविशिष्टेऽभिव्यञ्जके सर्व्वेषां भवति तस्मिन्घटत्वमभ्युपगम्यते साऽबाधितप्रतीतिः कस्मिन्भवति यत्र घटत्वं विद्यत इतीष्टैवानवस्था बीजाङ्कुरवदिहापीति न घटत्वरहिते नापितत्सहिते विद्यते घटत्वमित्यभिधीयत इति न दोषः ॥

इति मिथिलामहीमण्डलान्तर्गतदरभङ्गाराजकीय ठाढ़ीग्रामनिवास्तव्येन, काशीस्थरानीचन्द्रावती श्यामामहाविद्यालयारम्भकतत्प्रधानाध्यापकेन, मैथिल-भूसुर-पण्डितवर श्रीश्रीनन्दनझा शर्म्मणा, निर्म्मितः कारणत्वविवेकः समाप्तः ॥



मुन्यङ्कनन्दधरणीमितविक्रमाब्दे
विन्द्वब्धिरत्नवसुधातुलितेशवीये ।
पौषे सिते फणितिथौ गुरुभूपितायां
पूर्णत्वमेष गतवान् भगवत्प्रसादात् ॥१॥

